जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः॥ ९॥

अर्द्धाचिता सत्वरमुत्थिताया:
पदे पदे दुर्निमिते गलन्ती।
कस्याश्चिदासीद्रशना तदानीम्
अङ्गुष्ठमूलार्पितसूत्रशेषा॥ १०॥

जालेति। अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रेरितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसनग्रन्थिम्। "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससोः" इति विश्वः। न बबन्ध किन्तु नाभिप्रविष्टा आभरणानां कङ्कणादीनां प्रभा यस्य तेन। प्रभैव नाभेराभरणमभूत् इति भावः। हस्तेन वासः अवलम्ब्य गृहीत्वा तस्थौ॥ ९॥

अर्द्धेति। सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाचिता मणिभिः अर्द्धगुम्फिता दुर्निमिते संभ्रमात् दुरुत्क्षिप्ते। डुमिञ् प्रक्षेपणे इति धातोः कर्म्मणि क्तः। पदेपदे प्रतिपदम्। वीप्सायां द्विर्भावः। गलन्ती गलद्रत्ना सती रशना मेखला तदानीम् अङ्गुष्ठमूले अर्पितं सूत्रम् एव शेषः यस्याः सा आसीत्॥ १०॥

तासां मुखैरासवगन्धगर्भैः
व्याप्तान्तराः सान्द्रकुतूहलानाम्। (१)
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन्॥ ११॥

ता राघवं दृष्टिभिरापिबन्त्यः
नार्य्यो न जग्मुर्विषयान्तराणि।
तथाहि शेषेन्द्रियवृत्तिरासां
सर्व्वात्मना चक्षुरिव प्रविष्टा (२)॥ १२॥

तासामिति। तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धः गर्भे येषां तैः विलोलानि नेत्राणि एव भ्रमराः येषां तैः मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्राभरणाः इव कमलालङ्कृताः इव। "सहस्रपत्रं कमलम्" इत्यमरः। आसन्॥ ११॥

ता इति। ताः नार्य्यः रघोरपत्यं राघवम् अजम्। तस्यापत्यमित्यण्प्रत्ययः। दृष्टिभिः आपिबन्त्यः अतितृष्णया पश्यन्त्यः विषयान्तराणि अन्यान् विषयान् न जग्मुः न विविदुः इत्यर्थः। तथाहि, आसां नारीणां शेषेन्द्रियवृत्तिः चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्व्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टा इव। श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणायकैः

(१) सान्द्रमधिकं कुतूहलं यासां तासां" इति दिनकरः।

(२) प्रविशतेर्गत्यर्थकात् कर्त्तरि क्तः।

स्थाने वृता भूपतिभिः परोक्षैः
स्वयंवरं साधुममंस्त भोज्या ।
पद्मेव नारायणमन्यथासौ
लभेत कान्तं कथमात्मतुल्यम् ॥ १३ ॥

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥

चक्षुरेव प्रविश्य कौतुकात् स्वयमप्येनम् उपलभन्ते किमु, अन्यथा स्वविषयाधिगमः किं न स्यात् इति भावः ॥ १२ ॥

एवन् कथा इति वक्ष्यति ताः कथयति, स्थाने इत्यादिभिस्त्रिभिः । भोज्या इन्दुमती परोक्षैः अदृष्टैः भूपतिभिः वृता ममैवेयमिति प्रार्थिता अपि स्वयंवरम् एव साधुं हितम् अमंस्त मेने न तु परोक्षमेव कञ्चित् प्रार्थकं वव्रे, स्थाने युक्तमेतत् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । कुतः? अन्यथा स्वयंवराभावे असौ इन्दुमती पद्मम् अस्या अस्तीति पद्मा लक्ष्मीः । अर्श आदिभ्योऽच् इत्यच्प्रत्ययः । नारायणम् इव आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत न लभेत एव सदसद्विवेकासौकर्य्यात् इति भावः ॥ १३ ॥

परस्परेणेति । स्पृहणीयशोभं सर्व्वाङ्गास्यसौन्दर्य्यम् इदं द्वन्द्वमिथुनम् । द्वन्द्वं रहस्येत्यादिना निपातः । परस्परेण

रतिस्मरौ(१) नूनमिमावभूतां
राज्ञां सहस्रेषु तथाहि बाला ।
गतेयमात्मप्रतिरूपमेव
मनो हि जन्मान्तरसङ्गतिज्ञम् ॥ १५ ॥
इत्युद्गताः पौरवधूमुखेभ्यः
शृण्वन् कथाः श्रोत्रसुखाः कुमारः ।

न प्रयोजयिष्यत् चेत् न योजयेत् यदि, तर्हि प्रजानां पत्युः विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधानयत्नः सौन्दर्य्यनिर्म्माण-प्रयासः वितथः अभविष्यत् एतादृशानुरूपस्त्रीपुंसान्तराभावात् इति भावः । लिङ्निमित्ते लृङ् क्रियातिपत्ताविति लृङ् । "कुतश्चित् कारणवैगुण्यात् क्रियाया अनभिनिष्पत्तिः क्रियातिपत्तिः" इति वृत्तिकारः ॥ १४ ॥

रतीति । रतिस्मरौ यौ नित्यसहचरौ इत्यभिप्रायः नूनं तौ एव इयञ्च अयञ्च इमौ दम्पती अभूताम् एतद्रूपेण उत्पन्नौ । कुतः तथाहि इयं बाला राज्ञां सहस्रेषु राजसहस्र-मध्ये सत्यपि व्यत्यासकारणे इति भावः । आत्मप्रतिरूपं स्वतुल्यम् एव । "तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः" इति दण्डी । गता प्राप्ता । तदपि कथं जातमत आह, हि यस्मात् मनः जन्मान्तरसङ्गतिज्ञं भवति । तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीति ॥ १५ ॥

(1) Dinakara reads जातिस्मरौ and explains the same by "स्मरतीति स्मरः पचाद्यच् । जातिः स्मरौ जातिस्मरौ । महीधरवत्" ।

उद्भासितं मङ्गलसंविधाभिः (१)
सम्बन्धिनः सद्म समाससाद ॥ १६ ॥
ततोऽवतीर्य्याशु करेणुकायाः
स कामरूपे(२)श्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश
नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥

इतीति । इति "स्थाने वृते" त्याद्युक्तप्रकारेण पौरवधूमुखेभ्यः उद्गताः उत्पन्नाः श्रोत्रयोः सुखाः मधुराः । सुखशब्दो विशेष्य-निघ्नः । "पापपुण्यसुखादि च" इत्यमरः । कथाः गिरः शृण्वन् कुमारः अजः मङ्गलसंविधाभिः मङ्गलरचनाभिः उद्भासितं शोभितं सम्बन्धिनः कन्यादायिनः सद्म गृहं समाससाद प्राप ॥ १६ ॥

तत इति । ततः अनन्तरं करेणुकायाः हस्तिन्याः सकाशात् आशु शीघ्रम् अवतीर्य कामरूपेश्वरे दत्तः हस्तः येन सः अजः अथो अनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितम् अन्तश्चतुष्कं चत्वरं नारीणां मनांसि इव विवेश ॥ १७ ॥

(1) The following stanza, quoted from the Bhagavata Purana, enumerates a number of articles used on such auspicious occasions.

"संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलां। आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृन्तरम्भाक्रमुकैः सकेतुभिः स्वलङ्कृतद्वारगृहां सपट्टिकैः। तां (मथुरां) संप्रविष्टौ वसुदेवनन्दनौ" ।

(2) Kamrupa is in Assam and looked upon as a famous strong-hold of Tantrika mysticism.

महार्हसिंहासनसंस्थितोऽसौ
सरत्नमर्घ्यं मधुपर्कमिश्रम् ।
भोजोपनीतञ्च दुकूलयुग्मं
जग्राह सार्द्धं वनिताकटाक्षैः ॥ १८ ॥
दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिः
नवैरुदन्वानिव चन्द्रपादैः ॥ १९ ॥(१)
तत्रार्च्चितो भोजपतेः पुरोधाः
हुत्वाग्निमाज्यादिभि(२)रग्निकल्पः ।

महार्हेति । महार्हसिंहासने संस्थितः असौ अजः भोजेन उपनीतं रत्नैः सहितं सरत्नं मधुपर्कमिश्रम् अर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोः युग्मञ्च वनिताकटाक्षैः अन्यस्त्रीणाम् अपाङ्गदर्शनैः सार्द्धं जग्राह गृहीतवान् ॥ १८ ॥

दुकूलेति । दुकूलवासाः सः अजः विनीतैः नम्रैः अवरोधरक्षैः अन्तःपुराधिकृतैः वधूसमीपं निन्ये । तत्र दृष्टान्तः, स्फुटफेनराजिः उदन्वान् समुद्रः नवैः नूतनैः चन्द्रपादैः चन्द्रकिरणैः वेलायाः सकाशं समीपम् इव । ~~पूर्णदृष्टान्तोऽयम्~~ ॥ १९ ॥

(1) The 17TH, 18TH, and 19TH stanzas are omitted in the Bombay edition.

(२) आज्यादिभि "राज्यशमीपत्रलाजै"रिति दिनकरः ।

तमेव चाधाय विवाहसाक्ष्ये (१)
वधूवरौ सङ्गमयाञ्चकार ॥ २० ॥
हस्तेन हस्तं परिगृह्य वध्वाः
स राजसूनुः सुतरां चकाशे ।
अनन्तराशोकलताप्रवालं
प्राप्येव चूतः प्रतिपल्लवेन ॥ २१ ॥
आसीद् वरः कण्टकितप्रकोष्ठः
स्विन्नाङ्गुलिः संववृते कुमारी ।

तत्रेति । तत्र सद्मनि अर्चितः पूजितः अग्निकल्पः अग्नितुल्यः भोजपतेः भोजदेशाधीश्वरस्य पुरोधाः पुरोहितः । "पुरोधास्तु पुरोहितः" इत्यमरः । आज्यादिभिः द्रव्यैः अग्निं हुत्वा तम् एव चाग्निं विवाहसाक्ष्ये आधाय साक्षिणं कृत्वा इत्यर्थः वधूवरौ सङ्गमयाञ्चकार योजयामास ॥ २० ॥

हस्तेनेति । सः राजसूनुः हस्तेन स्वकीयेन वध्वाः हस्तं परिगृह्य, अनन्तरायाः सन्निहितायाः अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूतः आम्रः इव, सुतरां चकाशे ॥२१॥

आसीदिति । वरः कण्टकितः पुलकितः प्रकोष्ठः यस्य सः आसीत् । "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः ।

(1) See कुशण्डिका ।

तस्मिन् द्वये तत्क्षणमात्मवृत्तिः
समं विभक्तेव मनोभवेन ॥ २२ ॥
तयोरपाङ्गप्रतिसारितानि
क्रियासमापत्तिनिवर्त्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञाम्
अन्योन्यलोलानि विलोचनानि ॥ २३ ॥

कुमारी स्विन्नाङ्गुलिः संवृत्ते बभूव। अतोऽत्र उच्यते, तस्मिन् द्वये मिथुने तत्क्षणम् आत्मवृत्तिः सात्त्विकोदयरूपा वृत्तिः मनोभवेन कामेन समं विभक्ता इव पृथक् कृता इव। अपराद्धस्य पाठान्तरे व्याख्यानान्तरम्। पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा तयोः बधूवरयोः मनोभवस्य वृत्तिः स्थितिः समं विभक्ता इव समीकृतेव इत्यर्थः। प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रतितत्कार्य्यदर्शनात् पाणिस्पर्शकृतत्वमुत्प्रेक्ष्यते। अत्र वात्स्यायनः, "कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च पुरुषस्तु रोमाञ्चितो भवति एभिरनयोर्भावं परीक्षेत" इति। स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणं न तु प्रतिनियमो विवक्षितः एभिरिति बहुवचनसामर्थ्यात्। एवं सति कुमारसम्भवे "रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" इति व्युत्क्रमवचनं न दोषायेति ॥ २२ ॥

तयोरिति। अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्त्तितानि क्रिययोः निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या

(१)प्रदक्षिणप्रक्रमणात् कृशानोः ।
उदर्चिषस्तन्मिथुनं चकाशे ।
मेरोरुपान्तेष्विव वर्त्तमानम्
अन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥
नितम्बगुर्व्वी गुरुणा प्रयुक्ता
वधूर्विधातृप्रतिमेन तेन ।

निवर्त्तितानि प्रत्याकृष्टानि अन्योन्यस्मिन् लोलानि सतृष्णानि । "लोलश्चलसतृष्णयोः" इत्यमरः । तयोः दम्पत्योः विलोचनानि दृष्टयः मनोज्ञां रम्यां ह्रिया निमित्तेन यन्त्रणां सङ्कोचम् आनशिरे प्रापुः ॥ २३ ॥ आङ् + अम

प्रदक्षिणेति । तत् मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानो वह्नेः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात्, मेरोः उपान्तेषु समीपेषु वर्त्तमानम् आवर्त्तमानं मेरुं प्रदक्षिणीकुर्व्वत् इत्यर्थः अन्योन्यसंसक्तं परस्परसङ्गतं, मिथुनस्यात्येतद्विशेषणम्, अहश्च त्रियामा च अहस्त्रियामं रात्रिन्दिवम् इव । समाहारे द्वन्द्वैकवद्भावः । चकाशे दिदीपे ॥ २४ ॥

नितम्बेति । नितम्बेन गुर्व्वी अलघ्वी । "दुर्द्धरालघुनो-

---

(१) ततः पतिरग्रतो वधूं कृत्वा इमं मन्त्रं पठन्नग्निप्रदक्षिणं करोति—

ओं कन्यला पितृभ्यः पतिलोकं यतीयमपदीक्षामयष्टकन्या उत त्वया वयं धारा उदन्या इवातिगाहेमहि द्विषः ।

चकार सा मत्तचकोरनेत्रा(१)
लज्जावती लाजविसर्गमग्नौ (२) ॥ २५ ॥
हविःशमीपल्लवलाजगन्धी
पुण्यः कृशानोरुदियाय धूमः ।
कपोलसंसर्पिशिखः स तस्याः
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥

गुर्व्वी" इति शाश्वतः । विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन प्रयुक्ता जुहुधीति नियुक्ता मत्तचकोरस्य इव नेत्रे यस्याः सा लज्जावती सा वधूः अग्नौ लाजविसर्गं चकार ॥२५॥

हविरिति । हविषः आज्यादेः शमीपल्लवानां लाजानां च गन्धः अस्यास्तीति हविःशमीपल्लवलाजगन्धी । शमीपल्लवमिश्रान् लाजान् अञ्जलिना वपतीति कात्यायनः । पुण्यः धूमः कृशानोः पावकात् उदियाय उद्भूतः । कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य सः तथोक्तः सः धूमः तस्याः वध्वाः मुहूर्त्तं कर्णोत्पलतां प्रपेदे ॥ २६ ॥

---

(१) हुतहुतभुगुत्थितेन धूमेनाहितलौहित्यत्वात् तस्याश्चक्षुषोः कामोन्मत्त-चकोरनेत्राभ्यां साम्यमवगन्तव्यम् ।

(२) ततो वरेणास्मिन् मन्त्रे पठिते वधूरञ्जलिमेदमञ्ज्वती लाजान् जुहोति—

इयं नार्य्युपब्रूतेऽग्नौ लाजानावपन्ती दीर्घायुरस्तु मे पतिः शत वर्षाणि जीवन्त्वन्तां ज्ञातयो मम । १ । अर्य्यमणं नु देवं कन्या अग्निमयक्षत स इमां देवोऽर्य्यमा प्रेतो मुञ्चातु मामुतः । २ । पूषाणं नु देवं कन्या अग्निमयक्षत स इमां देवः पूषा प्रेतो मुञ्चातु मामुतः । ३ ।

तदञ्जनक्लेदसमाकुलाक्षं
प्रम्लान(१)बीजाङ्कुरकर्णपूरम् ।
वधूमुखं पाटलगण्डलेखम्
आचारधूमग्रहणाद् बभूव ॥ २७ ॥
तौ स्नातकै(२)र्बन्धुमता च राज्ञा
पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम् ।
कन्याकुमारौ कनकासनस्थौ
आर्द्राक्षतारोपण(३)मन्वभूताम् ॥ २८ ॥

तदिति । तत् वधूमुखम् आचारेण प्राप्तात् धूमग्रहणात् अञ्जनस्य क्लेदः अञ्जनक्लेदः अञ्जनमिश्रबाष्पोदकम् इत्यर्थः तेन समाकुलाक्षं प्रम्लानः बीजाङ्कुरः यवाङ्कुरः एव कर्णपूरः अवतंसः यस्य तत् पाटलगण्डलेखम् अरुणगण्डस्थलञ्च बभूव ॥ २७ ॥

ताविति । कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः गृहस्थ-

---

(१) "बीजात् निर्गता अङ्कुरा बीजाङ्कुराः ।

लाजहोमं कृत्वा धूममाजिघ्रेत् इति गृह्यविदः । अन्ये तु कुलाचारत् धूमग्रहणमित्याहु"रिति दिनकरः ।

(२) "त्रिविधा हि स्नातकाः । विद्यास्नातको, व्रतस्नातको, विद्याव्रतस्नातकश्चेति । उक्तं च । गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वेति" दिनकरः । "मङ्गल्यभूतं स्नातको भवतीति विज्ञायते" । आश्वलायन । ३ । ९ । ८ ।

(३) "एषो हि लोकाचारः" इति वल्लभः । यदुक्तं आश्वलायनपरिशिष्टे—"तैजसेन

इति स्वसुर्भोजकुलप्रदीपः
सम्पाद्य पाणिग्रहणं स राजा।

विशेषैः। ‘स्नातकस्त्वाप्लुतव्रती’ इत्यमरः। बन्धुमता बन्धुपुरःसरेण इत्यर्थः राज्ञा च पुरन्ध्रिभिः पतिपुत्रवतीभिः नारीभिश्च क्रमशः प्रयुक्तं स्नातकादीनां पूर्व्वपूर्व्ववैशिष्ट्यात् क्रमेण कृतम् आर्द्राक्षतानाम् आरोपणम् अन्वभूताम् अनुभूतवन्तौ॥ २८॥

इतीति। अधिश्रीः अधिकसम्पन्नः भोजकुलप्रदीपः सः राजा इति स्वसुः इन्दुमत्याः पाणिग्रहणं विवाहं सम्पाद्य

---

पात्रेण क्षीरमानीय घृतमासिच्य अन्येनार्द्राक्षततण्डुलान्। अथ तथास्थितयोर्वधूवरयोर्वर्द्धनकमेतत् कारयेयुः। वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य्य द्विस्तण्डुलाञ्जलीनावपति यथा पूर्य्येत ततो द्विरुपरिष्टादभिघारयति एवं वराञ्जलावन्यस्तण्डुलापूरणं कुर्य्यात्। दाता तयोरञ्जल्योः हिरण्यमवदध्यात्। अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेत् दाता कन्यां धारयेत् “दक्षिणाः पान्तु बहुधेयञ्चास्तु पुण्यं वर्द्धतां शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्रसम्पदस्तु” इत्युक्त्वा कन्यामुत्क्षिप्य तदञ्जल्यक्षतान् वरमूर्द्धारोपयेत् वरोऽपि तन्मूर्द्ध्नि स्वाञ्जल्यक्षतानारोपयेत्। एवं त्रिः। इदानीं दाता वराय गोभूमिदासीयानशयनमन्नादिकमनुदानं दद्यात्। अथ पुरोधाः कांस्ये पयः आसिच्य औडुम्बर्य्याऽऽर्द्रया शाखया सपलाशया सहिरण्यपवित्रया सदूर्व्वापवित्रया अभिषिञ्चेत्। अथ वधूवरौ स्वशेखरपुष्पं क्षीरघृतेनाप्लाव्य परस्परतिलकं कुरुतः कण्ठे स्रजञ्चामुञ्चतः कौतुकसूत्रञ्च करे बध्नीयाताम्। अथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्चपूगफलानि विवाहव्रतरक्षणं गणाधिपमनुस्मृत्य बध्नीयात्। अथ दाता सभार्य्यो वृद्धाः पुरन्ध्री ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्य्युः”। १ २४।

महीपतीनां पृथगर्हणार्थं
समादिदेशाधिकृतानधिश्रीः ॥ २९ ॥
लिङ्गैर्मुदः संवृतविक्रियास्ते
ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां
प्रत्यर्प्य पूजामुपदाच्छलेन ॥ ३० ॥
स राजलोकः कृतपूर्व्वसंवित्
आरम्भसिद्धौ समयोपलभ्यम् । (१)

कारयित्वा महीपतीनां राज्ञां पृथक् एकैकशः अर्हणार्थं पूजार्थम् अधिकृतान् अधिकारिणः समादिदेश आज्ञापयामास ॥ २९ ॥

लिङ्गैरिति । मुदः सन्तोषस्य लिङ्गैः चिह्नैः कपटहासादिभिः संवृतविक्रियाः निगूहितमत्सराः अत एव प्रसन्नाः वहिर्निर्मलाः गूढनक्राः अन्तर्लीनग्राहाः ह्रदाः इव स्थिताः ते नृपाः वैदर्भं भोजम् आमन्त्र्य आपृच्छ्य तदीयां वैदर्भीयां पूजाम् उपदाच्छलेन उपायनमिषेण प्रत्यर्प्य ययुः गतवन्तः ॥ ३० ॥

स इति । आरम्भसिद्धौ कार्य्यसिद्धौ विषये पूर्व्वं कृता कृत-

(१) "समयेन शपथेन उपलभ्यं प्रमदैवामिषं रम्यापदार्थं वस्तु भोगवस्तु वा" इति दिनकरः ।

आदास्यमानः प्रमदामिषं तत्
आवृत्य पन्थानमजस्य तस्थौ ॥ ३१ ॥
भर्त्तापि तावत् क्रथकैशिकानाम्
अनुष्ठितानन्तरजाविवाहः ।
सत्त्वानुरूपाहरणीकृतश्रीः (१)
प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥

पूर्व्वा । सुपसुपेति समासः । कृतपूर्व्वा संवित् सङ्केतः मार्गाव-रोधरूपः उपायः येन सः तथोक्तः । "संवित् युद्धे प्रतिज्ञायां सङ्केतचारनामसु" इति केशवः । सः राजलोकः समयोपलभ्यम् अजप्रस्थानकाले लभ्यं तदा तस्यैकाकित्वात् इति भावः । समरो-पलभ्यमिति पाठे युद्धसाध्यम् इत्यर्थः । तत् प्रमदा एव आमिषं भोग्यवस्तु । "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि" इति केशवः । आदास्यमानः ग्रहीष्यमाणः सन् अजस्य पन्था-नम् आवृत्य अवरुध्य तस्थौ ॥ ३१ ॥

भर्त्तेति । अनुष्ठितः सम्पादितः अनन्तरजायाः अनुजायाः विवाहः येन सः तथोक्तः क्रथकैशिकानां देशानां भर्त्ता स्वामी भोजः अपि तावत् तदा सत्त्वानुरूपम् उत्साहानुरूपं यथा तथा आ समन्तात् । अनेनानियतवस्तुदानम् इत्यर्थः । हरणी

(१) Vallabha reads सत्त्वानुरूपाभरणीकृतश्रीः and explains by "आभरणीकृता अलङ्कारेण दत्ता श्रीर्येन सः"

तिस्रस्त्रिलोकीप्रथितेन सार्द्धम्
अजेन मार्गे वसतीरुषित्वा।
तस्मात् अपावर्त्तत कुण्डिनेशः
(१)पर्व्वात्यये सोम इवोष्णरश्मेः॥ ३३॥

प्रमन्यवः प्रागपि कोशलेन्द्रे
प्रत्येकमात्तस्वतया बभूवुः।
अतो नृपाश्चक्षमिरे समेताः
स्त्रीरत्नलाभं न तदात्मजस्य॥ ३४॥

कन्यायै देयं धनम्। "यौतुकादि तु यद्देयं स दायो हरणञ्च तत्" इत्यमरः। अहरणं हरणीकृता श्रीः येन तथोक्तः सन् राघवम् अजं प्रास्थापयत् प्रस्थापितवान् स्वयम् अन्वगात् अनुजगाम च॥ ३२॥

तिस्र इति। कुण्डिनं विदर्भनगरं तस्य ईशः भोजः त्रिषु लोकेषु प्रथितेन अजेन सार्द्धं मार्गे पथि तिस्रः वसतीः रात्रीः उषित्वा। "वसती रात्रिवेश्मनोः" इत्यमरः। कालाध्वनोरत्यन्तसंयोगे इति द्वितीया। पर्व्वात्यये दर्शान्ते उष्णरश्मेः सूर्य्यात् सोमः चन्द्रः इव, तस्मात् अजात् अपावर्त्तत तं विसृज्य निवृत्तः इत्यर्थः॥ ३३॥

प्रमन्यव इति। नृपाः राजानः प्राक् अपि प्रत्येकम् आत्त-

(१) अमावस्यायां हि सूर्य्याचन्द्रमसौ समसूत्रपातन्यायेन परस्परेण संगच्छेतामिति भावः।

तमुद्वहन्तं पथि भोजकन्यां
रुरोध राजन्यगणः स दृप्तः।
बलिप्रदिष्टां श्रियमाददानं
त्रैविक्रमं पादमिवेन्द्रशत्रुः (१)॥ ३५ ॥
तस्याः स रक्षार्थमनल्पयोधम्
आदिश्य पित्र्यं सचिवं कुमारः।
प्रत्यग्रहीत् पार्थिववाहिनीं तां
भागीरथीं (२) शोण इवोत्तरङ्गः॥ ३६ ॥

स्वतया दिग्विजये गृहीतधनत्वेन कोशलेन्द्रे रघौ प्रमन्यवः रूढवैराः बभूवुः, अतः हेतोः समेताः सङ्गताः, सन्तः तदात्मजस्य रघुसूनोः स्त्रीरत्नलाभं न चक्षमिरे न सेहिरे॥ ३४॥

तमिति। दृप्तः उद्धतः सः राजन्यगणः राजसङ्घातः भोजकन्याम् उद्वहन्तं नयन्तं तम् अजं बलिना वैरोचनिना प्रदिष्टां दत्तां श्रियम् आददानं स्वीकुर्वाणं त्रिविक्रमस्य इमं त्रैविक्रम पादम् इन्द्रशत्रुः प्रह्लादः इव पथि रुरोध। तथा च ब्रह्माण्डपुराणे, "वैरोचनविरोधेऽपि प्रह्लादः प्राक्तनं स्मरन्। विष्णोस्तु, क्रममानस्य पादाम्भोजं रुरोध ह॥" इति॥३५॥

तस्या इति। सः कुमारः अजः तस्याः इन्दुमत्याः रक्षा-

(१) As प्रह्लाद is not known as इन्द्रशत्रु, Vallabha explains it by नमुचिः।

(2) Both Dinakara and Vllabha read ज्योतीरथां in place of Bhagirathi. The Jyotiratha is noticed both in the Vishnupurana and Mahabharata and rises probably in the Vindhya mountain.

पत्तिः पदातिं रथिनं रथेशः
तुरङ्गसादी तुरगाधिरूढम्।
यन्ता गजस्याभ्यपतद्गजस्थं
तुल्यप्रतिद्वन्द्वि बभूव युद्धम्॥ ३७॥
नदत्सु तूर्य्येष्वविभाव्यवाचः
नोदीरयन्ति स्म कुलोपदेशान्।

थम् अनल्पयोधं बहुभटं पितुरागतं पित्र्यम् आप्तम् इत्यर्थः सचिवम् आदिश्य आज्ञाप्य तां पार्थिववाहिनीं राजसेनाम्। "ध्वजिनी वाहिनी सेना" इत्यमरः। भागीरथीम् उत्तरङ्गः शोणः शोणाख्यः नदः इव, प्रत्यग्रहीत् अभियुक्तवान्॥ ३६॥

पत्तिरिति। पत्तिः पादचारः योद्धा पदातिं पादचारम् अभ्यपतत्। पादाभ्याम् अततीति पदातिः। पादस्य पदित्यादिना पदादेशः। "पदातिपत्तिपदगपादातिकपदाजयः" इत्यमरः। रथेशः रथिकः रथिनं रथारोहम् अभ्यपतत्, तुरङ्गसादी अश्वारोहः तुरगाधिरूढम् अश्वारोहम् अभ्यपतत्। "रथिनः स्यन्दनारोहाः अश्वारोहास्तु सादिनः" इत्यमरः। गजस्य यन्ता हस्त्यारोहः गजस्थं पुरुषम् अभ्यपतत्, इत्थम् अनेन प्रकारेण तुल्यप्रतिद्वन्द्वि एकजातीयप्रतिभटं युद्धं बभूव। अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनः योधाः। "द्वन्द्वं कलहयुग्मयोः" इत्यमरः॥ ३७॥

नदत्स्विति। तूर्य्येषु नदत्सु सत्सु अविभाव्यवाचः अनव-

बाणाक्षरैरेव परस्परस्य
नामोर्ज्जितं चापभृतः शशंसुः ॥ ३८ ॥
उत्थापितः संयति रेणुरश्वैः
सान्द्रीकृतः स्यन्दनवंशचक्रैः।
विस्तारितः कुञ्जरकर्णतालै-
र्नेत्रक्रमेणोपरुरोध सूर्य्यम् ॥ ३९ ॥
मत्स्यध्वजा वायुवशाद्विदीर्णै-
र्मुखैः प्रवृद्धध्वजिनीरजांसि।

धार्य्यगिरः चापभृतः धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैः ते कुलोपदेशाः तान् कुलनामानि न उदीरयन्ति स्म न उच्चारयामासुः श्रोतुमशक्यत्वाद्वाचो नाब्रुवन् इत्यर्थः। किन्तु बाणाक्षरैः बाणेषु लिखिताक्षरैः एव परस्परस्य अन्योन्यस्य ऊर्ज्जितं प्रख्यातं नाम शशंसुः ऊचुः ॥ ३८ ॥

उत्थापित इति। संयति संग्रामे अश्वैः उत्थापितः, स्यन्दनवंशानां रथसमूहानां चक्रैः रथाङ्गैः सान्द्रीकृतः घनीकृतः। वंशः पृष्ठास्थि गेहोर्द्धकाष्ठे वेणौ गणे कुले" इति केशवः। कुञ्जरकर्णानां तालैः ताड़नैः विस्तारितः प्रसारितः रेणुः नेत्रक्रमेण अंशुकपरिपाट्या अंशुकमिव इत्यर्थः। "स्यात्कटांशुकयोर्नेत्रम्" इति, 'क्रमोऽङ्घ्रौ परिपाट्यां च" इति च केशवः। सूर्य्यम् उपरुरोध आच्छादयामास ॥ ३९ ॥

मत्स्येति! वायुवशात् विदीर्णैः विवृतैः मुखैः प्रवृद्धानि

बभुः पिबन्तः परमार्थमत्स्याः
पर्य्याविलानीव नवोदकानि ॥ ४० ॥
रथो रथाङ्गध्वनिना विजज्ञे
विलोलघण्टाक्वणितेन नागः
स्वभर्त्तृनामग्रहणाद् बभूव
सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥
आवृण्वतो लोचनमार्गमाजौ
रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा
बालारुणोऽभूद् रुधिरप्रवाहः ॥ ४२ ॥

ध्वजिनी-रजांसि सैन्यरेणून् पिबन्तः गृह्णन्तः मत्स्यध्वजाः मत्स्याकाराः ध्वजाः, पर्य्याविलानि परितः कलुषाणि नवोदकानि पिबन्तः परमार्थमत्स्याः इव, बभुः भान्ति स्म ॥ ४० ॥

रथ इति । सान्द्रे प्रवृद्धे रजसि रथः रथाङ्गध्वनिना चक्रस्वनेन विजज्ञे ज्ञातः, नागः हस्ती विलोलानां घण्टानां क्वणितेन नादेन विजज्ञे । आत्मपरावबोधः स्वपरविवेकः योधानाम् इति शेषः स्वभर्तॄणां स्वस्वामिनां नामग्रहणात् नामोच्चारणात् बभूव रजोऽन्धतया सर्व्वे स्वं परञ्च शब्दादेवानुमाय प्रजह्रुः इत्यर्थः ॥ ४१ ॥

आवृण्वत इति । लोचनमार्गम् आवृण्वतः दृष्टिपथम् उपरुन्धतः आजौ युद्धे विजृम्भितस्य व्याप्तस्य रजः एव अन्धकारं

स च्छिन्नमूलः क्षतजेन रेणु-
स्तस्योपरिष्टात् पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य
पूर्व्वोत्थितो धूम इवाबभासे ॥ ४३ ॥

प्रहारमूर्च्छापगमे रथस्थाः
यन्तॄनुपालभ्य निवर्त्तिताश्वान् ।
यैः सादिता लक्षितपूर्व्वकेतून्
तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

तस्य, शस्त्रक्षतेभ्यः अश्वद्विपवीरेभ्यः जन्म यस्य सः तथोक्तः रुधिरप्रवाहः बालारुणः बालार्कः अभूत् । "अरुणः भास्करेऽपि स्यात्" इत्यमरः । बालविशेषणं रुधिरसावर्ण्यार्थम् ॥ ४२ ॥

स इति । क्षतजेन रुधिरेण छिन्नमूलः त्याजितभूतलसम्बन्धः इत्यर्थः तस्य क्षतजस्य उपरिष्टात् पवनावधूतः वाताहतः सः रेणुः अङ्गारशेषस्य हुताशनस्य अग्नेः पूर्व्वोत्थितः धूमः इव, आबभासे दिदीपे ॥ ४३ ॥

प्रहारेति । रथस्थाः रथिनः, प्रहारेण या मूर्च्छा तस्याः अपगमे सति । मूर्च्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्म्मः इति कृत्वा निवर्त्तिताश्वान् यन्तॄन् सारथीन् उपालभ्य असाधु कृतम् इत्यधिक्षिप्य पूर्व्वं यैः स्वयं सादिताः कृताः लक्षितपूर्व्वकेतून् पूर्व्वदृष्टैः केतुभिः प्रत्यभिज्ञातान् इत्यर्थः, तान् एव सामर्षतया सकोपत्वेन हेतुना निजघ्नुः प्रजह्रुः ॥ ४४ ॥

अप्यर्द्धमार्गे परबाणलूनाः
धनुर्भृतां हस्तवतां पृषत्काः।
संप्रापुरेवात्मजवानुवृत्त्या
पूर्व्वार्द्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥

आधोरणानां गजसन्निपाते
शिरांसि चक्रैर्निशितैः क्षुराग्रैः।
हृतान्यपि श्येननखाग्रकोटि-
व्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥

अपीति। अर्द्धश्चासौ मार्गश्च तस्मिन् अर्द्धमार्गे परेषां बाणैः लूनाः छिन्नाः अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शराः आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिः लोहाग्रवद्भिः। "शस्त्रबाणाग्रयोः फलम्" इति विश्वः। पूर्व्वार्द्धभागैः शृणातीति शरुः तस्मै हितं शरव्यं लक्ष्यम्। उगवादिभ्यो यदिति यत्प्रत्ययः। "लक्षं लक्ष्यं शरव्यञ्च" इत्यमरः। संप्रापुः एव न तु मध्ये पतिताः इत्यर्थः ॥ ४५ ॥

आधोरणानामिति। गजसन्निपाते गजयुद्धे निशितैः अत एव क्षुराग्रैः क्षुरस्य अग्रमिव अग्रं येषां तैः चक्रैः आयुधविशेषैः हृतानि छिन्नानि अपि श्येनानां पक्षिविशेषाणाम्। "पत्त्री श्येनः" इत्यमरः। नखाग्रकोटिषु व्यासक्ताः केशाः येषां तानि आधोरणानां हस्त्यारोहाणाम्। "आधोरणा हस्ति-

पूर्व्वं प्रहर्त्ता न जघान भूयः
प्रतिप्रहाराक्षममश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं
प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥
तनुत्यजां वर्म्मभृतां विकोशैः
वृहत्सु दन्तेष्वसिभिः पतद्भिः ।
उद्यन्तमग्निं शमयाम्बभूवुः ।
गजा विविग्नाः करशीकरेण ॥ ४८ ॥

पका हस्त्यारोहा निषादिनः" इत्यमरः। शिरांसि चिरेण पेतुः पतितानि। शिरःपातात् प्रागेवाकाश पश्चादुत्पततां पक्षिणां नखेषु केशसङ्गश्चिरपातहेतुः इति भावः ॥ ४६ ॥

पूर्व्वमिति। पूर्व्वं प्रथमं प्रहर्त्ता अश्वसादी तौरङ्गिकः प्रतिप्रहारे अक्षमम् अशक्तं तुरङ्गमस्कन्धे निषण्णदेहं मूर्च्छितम् इत्यर्थः रिपुं भूयः न जघान पुनः न प्रजहार किन्तु प्रत्याश्वसन्तं पुनः उज्जीवन्तम् आचकाङ्क्ष। "नायुधव्यसनं प्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधात् इति भावः ॥ ४७ ॥

तनुत्यजामिति। तनुत्यजां तनुषु निस्पृहाणाम् इत्यर्थः वर्म्मभृतां कवचिनां सम्बन्धिभिः वृहत्सु दन्तेषु पतद्भिः अत एव, विकोशैः पिधानात् उद्धृतैः। "कोशोऽस्त्री कुट्मले खड्गपिधाने" इत्यमरः। असिभिः खड्गैः उद्यन्तम् उत्थितम् अग्निं विविग्नाः



शिलीमुखोत्कृत्तशिरःफलाढ्या
च्युतैः शिरस्त्रैश्चषकोत्तरेव ।
रणक्षितिः शोणितमद्यकुल्या
रराज मृत्योरिव पानभूमिः ॥ ४९ ॥
उपान्तयोर्निष्कुषितं (२) विहङ्गै-
राक्षिप्य तेभ्यः पिशितप्रियापि ।
केयूरकोटिक्षततालुदेशा
शिवा भुजच्छेदमपाचकार ॥ ५० ॥

भीताः गजाः करशीकरेण शुण्डादण्डजलकणेन शमयाम्बभूवुः शान्तं चक्रुः ॥ ४८ ॥

शिलीमुखेति । शिलीमुखैः बाणैः उत्कृत्तानि शिरांसि एव फलानि तैः आढ्या सम्पन्ना च्युतैः भ्रष्टैः शिरांसि त्रायन्ते इति शिरस्त्राणि शीर्षण्यानि । "शीर्षण्यञ्च शिरस्त्रे" इत्यमरः । तैः चषकोत्तरा चषकः पानपात्रम् उत्तरं (१) यस्यां सा इव । "चषको-ऽस्त्री पानपात्रम्" इत्यमरः । शोणितानि एव मद्यं तस्य कुल्याः प्रवाहाः यस्यां सा । "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः । रणक्षितिः युद्धभूमिः, मृत्योः पानभूमिः इव, रराज ॥ ४९ ॥

उपान्तयोरिति । उपान्तयोः प्रान्तयोः विहङ्गैः पक्षिभिः निष्कुषितं खण्डितम् । इणनिष्ठायामितीडागमः । भुजच्छेदं

(१) उत्तरं प्रधानं यत्र ।
(२) "पार्श्वयोः पक्षिभिर्निःसारीकृत"मिति दिनकरः ।

कश्चित् द्विषत्खड्गहृतोत्तमाङ्गः
सद्यो विमानप्रभुतामुपेत्य। (१)
वामाङ्गसंसक्तसुराङ्गनः स्वं
नृत्यत् कबन्धं समरे ददर्श (२) ॥५१॥
अन्योन्यसूतोन्मथनादभूतां
तावेव सूतौ रथिनौ च कौचित्।

भुजखण्डं तेभ्यः विहङ्गेभ्यः आक्षिप्य आच्छिद्य पिशितप्रिया मांसप्रिया अपि शिवा क्रोष्ट्री। "शिवः कीलः शिवा क्रोष्ट्री" इति विश्वः। केयूरकोट्या अङ्गदाग्रेण क्षतः तालुदेशः यस्याः सा सती अपाचकार अपसारयामास। किरतेः करोतेर्लिट् ५०॥

कश्चिदिति। द्विषतः खड्गेन हृतोत्तमाङ्गः छिन्नशिराः कश्चित् वीरः सद्यः विमानप्रभुतां विमानाधिपत्यं देवत्वम् इत्यर्थः उपेत्य प्राप्य वामाङ्गसंसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना यस्य सः तथोक्तः सन् समरे नृत्यत् स्वं निजं कबन्धं विशिरस्कं कलेवरं ददर्श। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्ध कलेवरम्" इत्यमरः॥५१

अन्योन्येति। कौचित् वीरौ अन्योन्यस्य सूतयोः सारथ्योः

(१) "आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः॥
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः" ॥ मनु। ७। ८९।

(२) "यस्मिन् युद्धे भटानां सहस्रं हन्यते तत्रैको कबन्धो नृत्यतीति आगमः। एतेनात तादृशं युद्धं जातमिति द्योत्यते॥ पुरुषस्य वामभागे स्त्रीणां स्थितिरिति शास्त्राचारः" इति दिनकरः।

वत्रश्वौ गदाव्यायतसंप्रहारौ
भग्नायुधौ बाहुविमर्दनिष्ठौ (१) ॥ ५२ ॥
परस्परेण क्षतयोः प्रहर्त्रो-
रुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीत्
एकाप्सरःप्रार्थितयोर्विवादः ॥ ५३ ॥ (२)

उन्मथनात् निधनात् तौ एव सूतौ रथिनौ च योद्धारौ अभूतां, तौ एव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतः दीर्घः संप्रहारः युद्धं ययोः तौ अभूतां, ततः भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्द्दे निष्ठा नाशः ययोः तौ अभूताम्। "निष्ठा निष्पत्ति-नाशान्ता" इत्यमरः ॥ ५२ ॥

परस्परेणेति। परस्परेण अन्योन्यं क्षतयोः क्षततन्वोः समकालम् एककालं यथा तथा उत्क्रान्तवाय्वोः युगपदुद्गत-प्राणयोः एका एव अप्सराः प्रार्थिता याभ्यां तयोः एकाप्सरः-प्रार्थितयोः प्रार्थितैकाप्सरसोः इत्यर्थः। वाहिताग्न्यादिष्विति

(१) "भवाःखिलयुद्धवेदित्वमुक्त"मिति वल्लभः।

(२) "यस्तु रणे हन्यते स्वर्गामिनं दिव्यतासुपगतं तमनुयन्तीतुमप्सरसः समायान्ती-त्यागमः। इहतु युगपत् परासुतामुपगतयोरेकस्यामेवागतायां दिव्याङ्गनायां कामुकयोः स्वर्गेऽपि युद्धमासीदिति भावः" इति दिनकरः।

In vedic literature the Apsarasas are represented as personifications of physical phenomena and wives of the Gandharvas, who are also described as

व्यूढावुभौ तावितरेतरस्मात्
भङ्गं जयञ्चापतुरव्यवस्थम्।
पश्चात् पुरोमारुतयोः प्रवृद्धौ
पर्य्यायवृत्त्येव महार्णवोर्म्मी॥ ५४॥

परनिपातः। अथवा, एकस्याम् अप्सरसि प्रार्थितं प्रार्थना ययोः इति विग्रहः। स्त्रियां बहुष्वप्सरस इति बहुत्वाभिधानं प्रायिकम्। कयोश्चित् प्रवृत्तौः योधयोः अमर्त्त्यभावे अपि दैवत्वे अपि विवादः कलहः आसीत्। एकामिषाभिलाषो हि महद्वैरवीजम् इति भावः॥ ५३॥

व्यूढाविति। तौ उभौ व्यूढौ सेनासङ्घातौ। "व्यूहस्तु बलविन्यासः" इत्यमरः। पश्चात् परश्च यौ मारुतौ तयोः पर्य्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव इतरेतरस्मात् अन्योन्यस्मात् अव्यवस्थं व्यवस्थारहितम् अनियतं जयं भङ्गं पराजयं च आपतुः प्राप्तवन्तौ॥ ५४॥

---

the fire of the sun, fire of lightning, rays of the moon and other attributes of the elementary life of heaven. The Apsarasas are likewise personified as the vapours attracted by the sun, sun-beams, plants and constellations. The Ramayana makes them arise from the ocean when it was churned. Manu represents them as one of the creations of the seven Manus, themselves created by the seven Risis, Marichi, Atri &. And in later mythology, they are considered daughters of Kasypa. See goldstucker's Sanskrit Dictionary.

परेण भग्नेऽपि बले महौजाः
ययावजः प्रत्यरिसैन्यमेव ।
धूमो निवर्त्तेत समीरणेन
यतस्तु कच्चस्तत एव वह्निः ॥ ५५ ॥
रथी निषङ्गी कवची धनुष्मान्
दृप्तः (१)स राजन्यकमेकवीरः ।
निवारयामास महावराहः
कल्प(२)च्चयोद्वृत्तमिवार्णवाम्भः ॥ ५६ ॥

परेणेति । बले स्वसैन्ये परेण परबलेन भग्ने अपि महौजाः महाबलः अजः अरिसैन्यं प्रति एव ययौ । तथाहि, समीरणेन वायुना धूमः निवर्त्तेत कच्चात् अपसार्य्येत । वर्त्ततेरयन्तात् कर्म्मणि सम्भावनायां लिङ् । वह्निस्तु यतः यत्र कच्चः तृणम् । "कच्चौ तु तृणवीरुधौ" इत्यमरः । ततः एव तत्रैव प्रवर्त्तते इति शेषः । सार्व्वविभक्तिकस्तसिः ॥ ५५ ॥

रथीति । रथी रथारूढ़ः निषङ्गी तूणीरवान् । "तूणो-

(1) Both Dinakara and Vallabha read दृप्त, for दृप्तः, and 'विलोड़यामास' for 'निवारयामास'.

(2) A Kalpa is equivalent to one day of Brahma and comprises the reigns of fourteen Manus or a thousand cycles, a cycle constituting of a revolution of the four ages सत्य, त्रेता, द्वापर and कलि । The age सत्य is equal

स दक्षिणं तूणमुखेन (१) वामं
व्यापारयन् हस्तमलक्ष्यताजौ।

पासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः। कवची वर्म्मधरः धनुष्मान् धनुर्धरः दृप्तः रणदृप्तः एकवीरः असहायशूरः सः अजः राजन्यकं राजसमूहम्। गोत्रोक्षेत्यादिना वुञ्प्रत्ययः। महावराहः वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तम् उद्वेलम् अर्णवाम्भः इव निवारयामास। ५६॥

स इति। सः अजः आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वामम् अतिसुन्दरम्। "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति विश्वः। व्यापारयन् अलक्ष्यत

to 4800, Treta to 3600, Dvapara to 2400, and Kali to 1200 years of the Gods (a year of men being equivalent to a day of the Gods). This is a minor Kalpa, a great kalpa being the measure of one hundred such years and forming the duration of the life of Brahma. Both kalpas and mahakalpas are periodical. At the end of the latter not only all the gods and all other forms are annihilated, but the elements are again merged into primary substance, besides which one only spiritual being exists. A minor kalpa affects only the forms of inferior creatures, and lower worlds, leaving the substance of the universe entire, and sages and gods unharmed. See V. P. Book I. chap III.

(1) Dinakara explains by "दक्षिणं हस्तं तूनीरस्य मुखे व्यापारयन् नालक्षात न वामं हस्तं प्रसारयन् ज्ञातः" Vallabha concurs with him.

आकर्णकृष्टा सकृदस्य योद्धुः
मौर्व्वीव बाणान् सुषुवे रिपुघ्नान् ॥ ५७ ॥
स रोषदष्टाधिकलोहितोष्ठैः
व्यक्तोर्द्धरेखा (३) भ्रुकुटीर्व्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैः
हुङ्कारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥
सर्व्वैर्बलाङ्गैर्द्विरदप्रधानैः
सर्व्वायुधैः कङ्कटभेदिभिश्च ।

शरसन्धानादयस्तु दुर्लक्ष्याः इत्यर्थः । सकृत् आकर्णकृष्टा योद्धुः अस्य अजस्य मौर्व्वी ज्या रिपून् हन्तीति रिपुघ्नाः तान् । अमनुष्यकर्तृके च इति टक्प्रत्ययः । बाणान् सुषुवे इव, इत्युत्प्रेक्षा ॥ ५७ ॥

स इति । सः अजः रोषेण दष्टाः अत एव अधिकलोहिताः ओष्ठाः येषां तानि तैः व्यक्ता ऊर्द्ध्वा रेखा यासां ताः भ्रुकुटीः भ्रूभङ्गान् वहद्भिः भल्लनिकृत्ताः बाणविशेषच्छिन्नाः कण्ठाः येषां तैः हुङ्कारगर्भैः सहुङ्कारैः हुङ्कुर्व्वद्भिः इत्यर्थः । द्विषतां शिरोभिः गां भूमिं तस्तार छादयामास ॥ ५८ ॥

सर्व्वैरिति । द्विरदप्रधानैः गजमुख्यैः सर्व्वैः बलाङ्गैः

---

(३) "व्यक्तोर्द्धरेखा इत्यनेन छिन्नशिरसो रेखात्रयं जायत इत्युक्तं" इति दिनकरः ।

सर्व्वप्रयत्नेन च भूमिपालाः ।
तस्मिन् प्रजह्रुर्युधि सर्व्व एव ॥ ५९ ॥
सोऽस्त्रव्रजैश्छन्नरथः परेषां
ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्व्वभागः
किञ्चित्प्रकाशेन विवस्वतेव ॥ ६० ॥
प्रियंवदात् प्राप्तमसौ कुमारः
प्रायुङ्क्त राजस्वधिराजसूनुः ।

सेनाङ्गैः । "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः । कङ्कटभेदिभिः कवचभेदिभिः । "उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इत्यमरः । सर्व्वायुधैश्च । बाह्यबलमुक्त्वा आन्तरमाह, सर्व्वप्रयत्नेन च सर्व्वे एव भूमिपालाः युधि तस्मिन् अजे प्रजह्रुः तं प्रजह्रुः इत्यर्थः । सर्व्वत्र सर्व्वकारकशक्तिसम्भवात् कर्म्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तम्, "अनेकशक्तियुक्तस्य विश्वस्यानेककर्म्मणः । सर्व्वदा सर्व्वथाभावात् क्वचित् किञ्चित् विवक्ष्यते ॥" इति ॥ ५९ ॥

स इति । परेषां द्विषाम् अस्त्रव्रजैः छन्नरथः सः अजः, नीहारैः हिमैः मग्नः दिनपूर्व्वभागः प्रातः कालः किञ्चित्प्रकाशेन ईषल्लक्ष्येण विवस्वता इव, ध्वजाग्रमात्रेण लक्ष्यः बभूव ध्वजाग्रादन्यत्र किञ्चिन्नलक्ष्यते स्म इत्यर्थः ॥ ६० ॥

प्रियंवदादिति । अधिराजसूनुः महाराजपुत्रः कुसुमास्त्र-

गान्धर्वमस्त्रं कुसुमास्त्रकान्तः
प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥
ततो धनुष्कर्षणमूढहस्तम्
एकांसपर्य्यस्तशिरस्त्रजालम्।
तस्थौ ध्वजस्तम्भनिषण्णदेहं
निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥
ततः प्रियोपात्तरसेऽ(१)धरोष्ठे
निवेश्य दध्मौ जलजं कुमारः।

कान्तः मदनसुन्दरः स्वप्ननिवृत्तलौल्यः स्वप्नविद्वेष्णः जागरूकः इत्यर्थः असौ कुमारः अजः प्रियंवदात् पूर्व्वोक्तात् गन्धर्व्वात् प्राप्तं गान्धर्व्वं गन्धर्व्वदैवताकम्। साऽस्य देवतेत्यण्। प्रस्वापयतीति प्रस्वापनं निद्राजनकम् अस्त्रं राजसु प्रायुङ्क्त प्रयुक्तवान् ॥ ६१ ॥

तत इति। ततः धनुःकर्षणे मूढहस्तम् अव्यापृतहस्तम् एकस्मिन् अंसे पर्य्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूहः यस्य तत् ध्वजस्तम्भेषु निषण्णाः अवष्टब्धाः देहाः यस्य तत् नरदेवानां राज्ञां सेना एव सैन्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः। निद्राविधेयं निद्रापरतन्त्रं तस्थौ। ६२ ॥

(१) "अधार अवर्णाशिनी ब्रह्मचारिणौ अलङ्कुर्व्वाणावधःशायिनौ स्यातां। अत ऊर्द्ध्वं त्रिरात्रं द्वादशरात्र"। आश्वालायन। १।८।१०-११। 'अतो गृहप्रवेशनीय

तेन स्वहस्तार्ज्जितमेकवीरः

पिबन् यशो मूर्त्तमिवाबभासे ॥ ६३ ॥

शङ्खस्वनाभिज्ञतया निवृत्ता-

स्तं सन्नशत्रुं ददृशुः स्वयोधाः ।

निमीलितानामिव पङ्कजानां

मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥

सशोणितैस्तेन शिलीमुखाग्रैः

निक्षेपिताः केतुषु पार्थिवानाम् ।

तत इति । ततः कुमारः अजः प्रियायाः इन्दुमत्याः उपात्तरसे आस्वादितमाधुर्य्ये अतिस्वाद्ये इति भावः अधरौष्ठे जलजं शङ्खं निवेश्य । "जलजं शङ्खपद्मयोः" इति विश्वः । दध्मौ मुखमारुतेन पूरयामास, तेनौष्ठनिविष्टेन शङ्खेन एकवीरः सः स्वहस्तार्जितं मूर्त्तं मूर्त्तिमत् यशः पिबन् इव आबभासे यशसः शुभ्रत्वात् इति भावः ॥ ६३ ॥

शङ्खेति । शङ्खस्वनस्य अजशङ्खध्वनेः अभिज्ञतया प्रत्यभिज्ञातत्वात् निवृत्ताः प्राक् पलाय्य संप्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तम् अजं, निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिविम्बचन्द्रम् इव, ददृशुः ॥ ६४ ॥

सशोणितैरिति । संप्रति राघवेण रघुपुत्रेण । पूर्व्वं रघुणा

---

होमादूर्द्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ स्याताम्' इति नारायणः । उक्तनियमात् "प्रियोपात्तरसेऽधरोष्ठे" इति यत् उक्तं तत् चिन्त्यं । यद्वा लक्षणया उपात्तशब्दस्य ग्रहणार्हरूपोऽर्थः अगत्या स्वीकर्त्तव्यः ।

यशो हृतं संप्रति राघवेण
न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥

स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः।
ललाटबद्धश्रमवारिबिन्दुः
भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥

इतः परानर्भकहार्य्यशस्त्रान्
वैदर्भि पश्यानुमता मयासि। (१)

इति भावः। हे राजानः! वः युष्माकं यशः हृतं जीवितं तु कृपया न हृतं न त्वशक्त्या इति भावः इत्येवंरूपा वर्णाः एतदर्थ-प्रतिपादकं वाक्यम् इत्यर्थः सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैः बाणाग्रैः साधनैः तेन अजेन प्रयोजककर्त्त्रा पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोजैरन्यैर्निवेशिताः लेखिताः इत्यर्थः। क्षिपतेर्ण्यन्तात् कर्म्मणि क्तः ॥ ६५ ॥

स इति। चापकोट्यां निहितः एकबाहुः येन सः शिरस्त्रस्य निष्कर्षणेन अपनयनेन भिन्नमौलिः स्रस्तकेशबन्धः। "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। ललाटे बद्धाः श्रमवारिबिन्दवः यस्य सः सः अजः भीतां प्रियाम् इन्दुमतीम् एत्य आसाद्य वचः बभाषे ॥ ६६ ॥

किमित्याह, इत इति। हे वैदर्भि! इन्दुमति! इतः

(१) "परान् शत्रून् पश्य। परपुरुषान् कथं पश्यामीत्यत आह। मया अनुमता अनुज्ञातासि मदनुज्ञया पश्येत्यर्थः" इति दिनकरः।

एवंविधेनाहवचेष्टितेन
त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥
तस्याः प्रतिद्वन्द्विभवाद्विषादात्
सद्यो विमुक्तं मुखमाबभासे ।
निश्वासवाष्पापगमात् प्रपन्नः
प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥
दृष्टापि सा ह्रीविजिता न साक्षात्
वाग्भिः सखीनां प्रियमभ्यनन्दत् ।

इदानीम् अर्भकहार्य्यशस्त्रान् बालकापहार्य्यायुधान् परान् शत्रून् पश्य मया अनुमता असि इत्यम् इति शेषः । एभिः नृपैः एवंविधेन निद्रारूपेण आहवचेष्टितेन रणकर्म्मणा मम हस्तगता हस्तगतवत् दुर्ग्रहा इत्यर्थः त्वं प्रार्थ्यसे अपजिहीर्ष्यसे इत्यर्थः । एवंविधेनेत्यत्र स्वहस्तनिर्द्देशेन सोपहासमुवाचेति द्रष्टव्यम् ॥ ६७ ॥

तस्या इति । प्रतिद्वन्द्विभवात् रिपुत्थात् विषादात् दैन्यात् सद्यः विमुक्तं तस्याः मुखं, निश्वासस्य यः वाष्पः उष्मा । "वाष्पो नेत्रजलोष्मणोः" इति विश्वः । तस्य अपगमात् हेतोः आत्मीयं प्रसादं नैर्म्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यते अनेनेति आत्मदर्शः दर्पणः इव, आबभासे ॥ ६८ ॥

दृष्टेति । सा इन्दुमती हृष्टा अपि पत्युः पौरुषेण प्रमुदिता अपि ह्रिया विजिता यतः अतः प्रियम् अजं साक्षात् स्वयं न

स्थली नवाम्भःपृषताभिवृष्टा
मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९ ॥
इति शिरसि स वामं पादमाधाय(१)राज्ञाम्
उदवहदनवद्यां तामवद्यादपेतः ।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा
समरविजयलक्ष्मीः सैव मूर्त्ता बभूव ॥७०॥

अभ्यनन्दत् न प्रशशंस, किन्तु नवैः अम्भःपृषतैः पयोविन्दुभिः अभिवृष्टा अभिषिक्ता स्थली अकृत्रिमा भूमिः। जानपदकुण्ड-गोणस्थलेत्यादिना अकृत्रिमार्थे ङीष्। अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिः इव, सखीनां वाग्भिः अभ्यनन्दत् ॥ ६९ ॥

इतीति। न वद्यते न उच्यते इति अवद्यं गर्ह्यम्। अवद्य-पण्येत्यादिना निपातः। "कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः। तस्मात् अपेतः निर्द्दोषः इत्यर्थः सः अजः इति राज्ञां शिरसि वामं पादम् आधाय अनवद्याम् अदोषां ताम् इन्दुमतीम् उदवहत् उपानयत् आत्मसाच्चकार इत्यर्थः। अयमर्थश्चामुद्वहन्तं पथि भोजकन्यामित्यत्र न श्लिष्टः। तस्य

(१) राज्ञां शिरसि वामपादमादाय ताम् निर्जित्य नतु वस्तुतो वामपादार्पणं कृत तस्य अनौचित्यादिति भावः। "ननु विवाहस्य पूर्व्वमेव जातत्वात् कथमिदानीमुदव हदिति प्रयोगः। उच्यते। प्रबलतरवैरिनिवहविजयात् इदानीमेव इन्दुमतीलाभा-त्विनाहोऽभूत्। यदि ताम् शत्रून् न व्यजेष्येत् तर्हि तैरिन्दुमत्यपहारे कृते विवाहोऽप्यकृत एव स्यादिति भावः"। इति दिनकरः।

प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभूत्
न हि सति कुलधुर्य्ये सूर्य्यवंश्या गृहाय ॥७१॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजपाणिग्रहणो नाम सप्तमः सर्गः ।

अजस्य रथतुरगाणां रजोभिः रूक्षाणि परुषाणि अलकाग्राणि यस्याः सा सा इन्दुमती एव मूर्त्ता मूर्त्तिमती समरविजयलक्ष्मीः बभूव । एतल्लाभादन्यः को विजयलक्ष्मीलाभः इत्यर्थः ॥ ७० ॥

प्रथमेति । प्रथमम् अजागमनात् प्राक् एव परिगतः ज्ञातः अर्थः विवाहविजयरूपः येन सः प्रथमपरिगतार्थः रघुः विजयिनं विजययुक्तं श्लाघ्यजायासमेतं सन्निवृत्तं प्रत्यागतं तम् अजम् अभिनन्द्य तस्मिन् अजे उपहितकुटुम्बः सन् "सुतविन्यस्तपत्नीकः" इति याज्ञवल्क्यस्मरणात् इति भावः । शान्तिमार्गे मोक्षमार्गे उत्सुकः अभूत्, तथाहि कुलधुर्य्ये कुलधुरन्धरे सति सूर्य्यवंश्याः गृहाय गृहस्थाश्रमाय न भवन्ति ॥ ७१ ॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनी समाख्यायां सप्तमः सर्गः ।

# अष्टमः सर्गः।

अथ तस्य विवाहकौतुकं
ललितं बिभ्रत एव(१) पार्थिवः।
वसुधामपि हस्तगामिनीम्
अकरोदिन्दुमतीमिवापराम्(२) ॥ १ ॥

हेरम्बमवलम्बेऽहं यस्मिन् पातालकेलिषु।
दन्तेनोद्धरति क्षौणीं विश्राम्यन्ति फणीश्वराः ॥

अथेति। अथ पार्थिवः रघुः ललितं सुभगं विवाहकौतुकं विवाहमङ्गलं विवाहहस्तसूत्रं वा बिभ्रतः एव। "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः। तस्य अजस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् अस्मिन् सर्गे वैतालीयं छन्दः ॥ १ ॥

(१) "अत ऊर्द्ध्वं त्रिरात्रं द्वादशरात्रं। संवत्सरं वैक ऋषि र्जायत इति"। इति शासनात् वधूवरौ गृहप्रवेशानन्तरं त्रिरात्रं द्वादशरात्रं कदाचित् संवत्सरं वा, ब्रह्मचर्य्यमनुतिष्ठन्तौ हस्तसूत्रं धारयेतामिति मर्य्यादायाति।

(2) The purport of the stanza is, that the ceremony of installation was performed before the post-nuptial vow of celebacy, adopted by Aja according to the prescribed usage, was over, i. e. within 3 or 12 days after he had reached home. See the 65TH—stanza of canto VI.

दुरितैरपि(३) कर्त्तुमात्मसात्
प्रयतन्ते नृपसूनवो हि यत्।
तदुपस्थितमग्रहीदजः
पितुराज्ञेति न भोगतृष्णया॥ २॥
अनुभूय वशिष्ठसम्भृतैः
सलिलैस्तेन सहाभिषेचनम्।

दुरितैरिति। नृपसूनवः राजपुत्राः यत् राज्यं दुरितैः अपि विषप्रयोगादिनिषिद्धोपायैः अपि आत्मसात् स्वाधीनम्। तदधीनवचन इति सातिप्रत्ययः। कर्त्तुं प्रयतन्ते हि प्रवर्त्तन्ते एव इत्यर्थः। हिशब्दोऽवधारणे। "हि हेतावधारणे,, इत्यमरः। उपस्थितं स्वतः प्राप्तं तत् राज्यम् अजः पितुराज्ञेति हेतोः अग्रहीत् स्वीचकार भोगतृष्णया तु न अग्रहीत्॥ २॥

अनुभूयेति। मेदिनी भूमिः महिषी च ध्वन्यते वशिष्ठेन सम्भृतैः सलिलैः तेन अजेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन स्फुटमुद्दर्शनेन आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते, कृतार्थतां गुणवद्भर्तृलाभकृतं साफल्यं कथयामास इव।

---

(3) The history of Hindu kings presents very few instances of their having been violently or unfairly deposed. The poet may have probably had in view the case of विक्रमादित्य, who is said, according to one version of the tradition, to have deposed his brother भर्तृहरि and usurped the crown of Ujjayini.

विशदोच्छ्वसितेन(१) मेदिनी
कथयामास कृतार्थतामिव ॥ ३ ॥
स बभूव दुरासदः परै-
र्गुरुणाथर्व्वविदा कृतक्रियः (२)।
पवनाग्निसमागमो ह्ययं
सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥

न चैतावता पूर्व्वेषामपकर्षः प्रशंसापरत्वात् "सर्व्वत्र जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इत्यङ्गीकृतत्वाच्च ॥ ३ ॥

स इति। अथर्वविदा अथर्ववेदाभिज्ञेन गुरुणा वशिष्ठेन कृतक्रियः अथर्व्वोक्तविधिना कृताभिषेकसंस्कारः इत्यर्थः सः अजः परैः शत्रुभिः दुरासदः दुर्द्धर्षः बभूव। तथाहि, अस्त्रतेजसा क्षात्त्रतेजसा सहितं युक्तं यत् ब्रह्म ब्रह्मतेजः अयं पवनाग्निसमागमः हि तत्कल्पः इत्यर्थः। पवनाग्नीत्यत्र पूर्व्वनिपातशास्त्रस्यानित्यत्वात् द्वन्द्वे घीति नाग्निशब्दस्य पूर्व्वनिपातः। तथाच काशिकायाम्, "अयमेकस्तु लक्षणहेत्वोरिति निर्द्देशः पूर्व्वनिपातव्यभिचारचिह्नम्" इति। क्षात्त्रेणैवायं दुर्द्धर्षः किमयं पुनर्वशिष्ठमन्त्रप्रभावे सति इत्यर्थः। अत्र मनुः, "नाक्षत्त्रं ब्रह्म

---

(१) विशदं निर्म्मलं उच्छ्वसितं अभिषेचनजनितं वाष्पमोचनं तेन।

(२) "यः सपत्नो योऽसपत्नो यश्च द्विषञ्छपाति नः देवास्तं सर्व्वे धूर्व्वन्तु" इत्यादिभिराथर्व्वणमन्त्रैः कृता निष्पादिता क्रिया शान्तिकपौष्टिककार्य्यं यस्य स तथोक्तः।

See Canto I 59. and 60.

रघुमेव निवृत्तयौवनं
तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं
प्रतिपेदे सकलान् गुणानपि ॥ ५ ॥
अधिकं शुशुभे शुभंयुना
द्वितयेन द्वयमेव सङ्गतम् ।
पदमृद्धमजेन पैतृकं
विनयेनास्य(१) नवञ्च यौवनम् ॥ ६॥

भवति बलं नाब्रह्म वर्द्धते । ब्रह्मबले तु संयुक्ते इहामुत्र च वर्द्धते ॥" इति ॥ ४ ॥

रघुमिति । प्रजाः नवेश्वरं तम् अजम् निवृत्तयौवनं प्रत्यावृत्तयौवनं रघुम् एव अमन्यन्त न किञ्चिद्भेदकमस्ति इत्यर्थः । कुतः ? हि यस्मात् सः अजः तस्य रघोः केवलाम् एकां श्रियं न प्रतिपेदे किन्तु सकलान् गुणान् शौर्य्यदाक्षिण्यादीन् अपि प्रतिपेदे अतस्तद्गुणयोगात् तद्बुद्धियुक्ता इत्यर्थः ॥५॥

अधिकमिति । द्वयम् एव शुभंयुना शुभवता । "शुभंयुस्तु शुभान्वितः" इत्यमरः । अहंशुभयोर्युस् इति युस्प्रत्ययः । द्वितयेन सङ्गतं युतं सत् अधिकं शुशुभे । किं केनेत्याह, पदमिति ।

(१) "विनयेन अस्यैव नवं यौवनं बभौ । यौवने विनयस्तु दुर्लभः । अयं तु प्राप्तैश्वर्य्यः यौवनेऽपि विनयवानासीदिति दिनकरः । यदुक्तं—"विनीतात्माहि नृपति-र्नविनश्यति कर्हिचेत्" इति । मनु । ७ । ३९ ।

सदयं बुभुजे महाभुजः
सहसोद्वेगमियं व्रजेदिति।
अचिरोपनतां स मेदिनीं(१)
नवपाणिग्रहणां बधूमिव॥ ७॥
अहमेव मतो महीपते-
रिति सर्व्वः प्रकृतिष्वचिन्तयत्।
उदधेरिव निम्नगाशते-
ष्वभवन्नास्य विमानना क्वचित्॥ ८॥

पैतृकं पितुरागतम्। ऋतष्ठञ् इति ठञ्प्रत्ययः। ऋद्धं समृद्धं पदं राज्यम् अजेन, अस्य अजस्य नवं यौवनं विनयेन च॥ ६॥

सदयमिति। महाभुजः सः अजः अचिरोपनतां नवोपगतां मेदिनीं भुवं नवं पाणिग्रहणं विवाहः यस्याः ताम् नवोढ़ां बधूम् इव, सहसा बलात्कारेण चेत्। "सहोबलं सहामार्गः" इत्यमरः। इयं मेदिनी बधूः वा उद्वेगं भयं व्रजेत् इति हेतोः सदयं सकृपं बुभुजे भुक्तवान्। भुजोऽनवन इत्यात्मनेपदम्॥ ७॥

अहमिति। प्रकृतिषु प्रजासु मध्ये सर्व्वः जनः, अथवा प्रकृतिष्वहमित्यनेनान्वयः व्यवधानन्तु सह्यम्। सर्व्वः जनः प्रकृतिषु अहमेव महीपतेः मतः महीपतिना मन्यमानः। मतिबुद्धिपजार्थेभ्यश्चेति वर्त्तमाने क्तः, क्तस्य च वर्त्तमाने इति षष्ठी। इति अचिन्तयत् अमन्यत। उदधेः निम्नगाशतेषु इव, अस्य

(१) नवलब्धं राज्यं मार्द्दवं वितत्य शशास इति भावः।

न खरो न च भूयसा मृदुः
पवमानः पृथिवीरुहानिव।
स पुरस्कृतमध्यमक्रमः
नमयामास नृपाननुद्धरन्॥ ९॥
अथ वीक्ष्य रघुः प्रतिष्ठितं
प्रकृतिष्वात्मजमात्मवत्तया।
विषयेषु विनाशधर्म्मसु
त्रिदिवस्थेष्वपि निःस्पृहोऽभवत्॥ १०॥

नृपस्य कर्त्तुः। कर्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी। क्वचित् अपि जने विषये विमानना अवगणना तिरस्कारः न अभवत् यतो न कश्चिदवमन्यते अतः सर्व्वोऽप्यहमेवास्य मत इत्यमन्यत इत्यर्थः॥ ८॥

न खर इति। सः नृपः भूयसा बाहुल्येन खरः तीक्ष्णः न, भूयसा मृदुः अतिमृदुः अपि न, किन्तु पुरस्कृतमध्यमक्रमः सन् मध्यमपरिपाटीमवलम्ब्य इत्यर्थः, पवमानः वायुः पृथिवीरुहान् तरून् इव नृपान् अनुद्धरन् अनुत्पाटयन् एव नमयामास। अत्र कामन्दकः, "मृदुश्चैवमन्येत तीक्ष्णादुद्विजते जनः। तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च सम्मतः॥" इति॥ ९॥

अथेति। अथ रघुः आत्मजं पुत्रम् आत्मवत्तया निर्विकारमनस्कतया इत्यर्थः। "उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते। आत्मवान् सत्त्ववायुक्तः" इत्युत्पलमालायाम्। प्रकृतिषु

गुणवत्सुतरोपितश्रियः
परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां
प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥
तमरण्यसमाश्रयोन्मुखं
शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयोः
अपरित्यागमयाचतात्मनः ॥ १२ ॥

अमात्यादिषु(१) प्रतिष्ठितं रूढ़मूलं वीक्ष्य ज्ञात्वा विनाशः धर्म्मः येषां तेषु विनाशधर्म्मसु अनित्येषु इत्यर्थः। धर्म्मादनिच् केवलादित्यनिच् प्रत्ययः समासान्तः। त्रिदिवस्थेषु स्वर्गस्थेषु अपि विषयेषु शब्दादिषु निःस्पृहः निर्गतेच्छः अभवत् ॥ १० ॥

कुलधर्म्मश्चायमेवेत्याह, गुणवदिति। दिलीपवंशजाः परिणामे वार्द्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः तरुवल्कानि एव वासांसि येषां तेषां संयमिनां यतीनां पदवीं प्रपेदिरे यस्मात् तस्मादस्यापीदमुचितम् इत्यर्थः ॥ ११ ॥

तमिति। अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं रघुं सुतः अजः वेष्टनशोभिना उष्णीषमनोहरेण शिरसा

---

(१) "अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः"।
See Manu. Book. VII. 155—157.

रघुरश्रुमुखस्य तस्य तत्
कृतवानीप्सितमात्मजप्रियः।
न तु सर्प इव त्वचं पुनः
प्रतिपेदे व्यपवर्जितां श्रियम् ॥ १३ ॥

स किलाश्रममन्त्यमाश्रितः
निवसन्नावसथे पुराद्बहिः।
समुपास्यत पुत्त्रभोग्यया
स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥

पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत मां परित्यज्य न गन्तव्यमिति प्रार्थितवान् इत्यर्थः ॥ १२ ॥

रघुरिति। आत्मजप्रियः पुत्रवत्सलः रघुः अश्रूणि मुखे यस्य तस्य अश्रुमुखस्य अजस्य तत् अपरित्यागरूपम् ईप्सितम् अभिलषितं कृतवान्, किन्तु सर्पः त्वचम् इव, व्यपवर्जितां त्यक्तां श्रियं पुनः न प्रतिपेदे न प्राप ॥ १३ ॥

स इति। सः रघुः किल अन्त्यम् आश्रमं प्रव्रज्याम् आश्रितः पुरात् नगरात् वहिः आवसथे स्थाने निवसन् अविकृतेन्द्रियः जितेन्द्रियः सन् इत्यर्थः, अत एव स्नुषया इव वध्वा इव, पुत्र-भोग्यया न स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः। जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषा-व्यतिरेकेण न किञ्चिदपेक्षितमासीत् इत्यर्थः। अत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य

प्रथमस्थितपूर्व्वपार्थिवं
कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुलाम्
उदितार्केण समारुरोह तत् ॥ १५ ॥

ब्राह्मणः प्रव्रजेद् गृहात्" इति मनुस्मरणात् "मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्म्मो न विद्यते ॥" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुः तथापि "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् "ब्राह्मणः क्षत्त्रियो वापि वैश्यो वा प्रव्रजेद् गृहात्" इति स्मरणात् "मुखजानामयं धर्म्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च कुत्रचिद् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रपेदिरे । तथा सति "स किलाश्रममन्त्यमाश्रितः" इति अत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः । अन्यथा वानप्रस्थाश्रमतया व्याख्याते 'विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित्" इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥ १४ ॥

प्रथमेति । प्रथमे स्थितः पूर्व्वपार्थिवः रघुः यस्य तत् अभ्युद्यतः अभ्युदितः नूतनेश्वरः अजः यस्य तत् प्रसिद्धं कुलं

यतिपार्थिवलिङ्गधारिणौ
ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोः
भुवमंशाविव धर्म्मयोर्गतौ ॥ १६ ॥
अजिताधिगमाय मन्त्रिभिः
युयुजे नीतिविशारदैरजः ।
अनपायिपदोपलब्धये
रघुराप्तैः समियाय योगिभिः ॥ १७ ॥

निभृतेन्दुना असमयासन्नचन्द्रेण उदितार्केण प्रकटितसूर्य्येण नभसा तुलां सादृश्यम् आरुरोह प्राप । न च नभसा तुलामित्यत्र तुल्यार्थैरित्यादिना प्रतिषेधस्तृतीयायाः तस्य सदृशवाचितुलाशब्दविषयत्वात् कृष्णस्य तुला नास्तीति प्रयोगात् अस्य च सादृश्यवाचित्वात् ॥ १५ ॥

यतीति । यतिः भिक्षुः पार्थिवः राजा तयोः लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोः मोक्षाभ्युदयफलयोः धर्म्मयोः निवर्त्तकप्रवर्त्तकरूपयोः भुवं गतौ भूलोकम् अवतीर्णौ अंशौ इव जनैः ददृशाते दृष्टौ ॥ १६ ॥

अजितेति । अजः अजिताधिगमाय अजितपदलाभाय नीतिविशारदैः नीतिज्ञैः मन्त्रिभिः युयुजे सङ्गतः, रघुः अपि अनपायिपदस्य उपलब्धये मोक्षस्य प्राप्तये यथार्थदर्शिनः यथार्थवादिनश्च आप्ताः तैः योगिभिः समियाय सङ्गतः । उभयत्राप्युपायचिन्तार्थम् इति शेषः ॥ १७ ॥

नृपतिः प्रकृतीरवेक्षितुं
व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां
कुशपूतं प्रवयास्तु विष्टरम्॥ १८॥

अनयत् प्रभुशक्तिसम्पदा
वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया
मरुतः पञ्च शरीरगोचरान्॥ १९॥

नृपतिरिति। युवा नृपतिः अजः प्रकृतीः प्रजाः कार्य्यार्थिनीः अवेक्षितुं दुष्टादुष्टपरिज्ञानार्थम् इत्यर्थः व्यवहारासनं धर्म्मासनम् आददे स्वीचकार। प्रवयाः स्थविरः नृपतिः रघुस्तु। "प्रवयाः स्थविरो वृद्धः" इत्यमरः। धारणां चित्तस्यैकाग्रतां परिचेतुम् अभ्यसितुम् उपांशु विजने। "उपांशु विजने प्रोक्तम्" इति हलायुधः। कुशैः पूतं विष्टरम् आददे। "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः॥" इति वशिष्ठः॥ १८॥

अनयदिति। एकः अन्यतरः अजः इत्यर्थः अनन्तरान् स्वभूम्यनन्तरान् नृपतीन् यातव्यपार्ष्णिग्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना वशं स्वायत्तताम् अनयत्। अपरः रघुः प्रणिधानयोग्यया समाध्यभ्यासेन। "योग्याभ्यासार्कयोषितोः" इति विश्वः। शरीरगोचरान् देहाश्रयान् पञ्च मरुतः प्राणादीन् वशम् अनयत्॥ १९॥

